वृथा न कालं गमयेद् द्यूतस्त्रीस्वापवादतः ।
गमयेद्देवतापूजाजपयोगस्तवादिना ॥ ८६ ॥
गुरोः कृपालापकथास्तोत्रागमविलोकनैः ।
गमयेदनिशं कालं न वदेत् परदूषणम् ॥ ८७ ॥
प्रत्यक्षे च परोक्षे च स्तुवीत प्रणमेद्गुरुम् ।
तद्गुणैस्तत्कृपाधिक्यैः पुण्यैश्वर्य्यैश्च सत्यतः ॥ ८८ ॥
रागलोभमदक्रोध*पापपैशुन्यवर्जनैः ।
†सन्तोषाचारनियमशान्तिज्ञानादिभिस्तथा ॥ ८९ ॥
मिताहारो मितालापो विविक्तसमवर्त्तिता ‡ ।
नित्याचिन्ता स्वात्मशुद्धिः कृत्यमात्मवतां सदा ॥ ९० ॥

---

द्वितीयान्तानां पदानामुत्तरत्र श्लोके विमृशेदित्यनेनान्वयः। अन्यान् व्यापारान् दृष्टादृष्टानुपयुक्तानिति यावत्। कालतः क्षणात् पतितान् बन्धुचिन्ताद्यादुर्लङ्घ्यान् बन्धुभिः चित्तैः राजादिभिरपि दुर्लङ्घ्यान् कालतः क्षणात् पतितान् पुरुषादीनिति यावत्। अशुभात्मनः अशुभस्वभावान्। द्यूतस्त्रीस्वापवादत इत्यत्र द्यूतशब्दो निर्जीवद्यूतसजीवद्यूतविषयः। स्त्रीशब्दस्तु धर्मपत्नी-व्यतिरिक्तविषयः। स्वापशब्दः प्राप्तेतरविषयः। वादशब्दो जल्पवितण्डादि-विषयः। स्तवादिना इत्यत्रादिशब्दः प्रदक्षिणनमस्कारादिविषयः। गुरोः कृपालापकथास्तोत्रागमविलोकनैः गुरोः कृपायाः गुरोरालापानां च गुरोः कथाभिः गुरोः स्तोत्रैः गुरोर्लब्धागमविलोकनैश्च। तद्गुणैः गुरुगुणैः। अस्मिन् श्लोके चोत्तरश्लोके च तृतीयान्तानां पदानां स्तुवीतेत्यनेनान्वयः। तत्कृपा-धिक्यैः गुरुकृपाधिक्यैः। तद्गुणैरित्यादि तृतीयान्तेषु त्रिषु चानन्तरश्लोके तृतीया-न्तयोः पदयोः च गुरोरित्यध्याहार्य्यं। तत्र सत्यतः सत्येन वाङ्मनः-कर्म्मणामेकरूपेणेति यावत्। ज्ञानादिभिरित्यत्रादिशब्दो दानादिविषयः। नित्याचिन्ता षोड़शनित्यानां स्वरूपचिन्ता। स्वात्मशुद्धिः स्ववाङ्मनःकायानां शुद्धिरिति यावत् ॥ ९० ॥

---

* क्रौर्य्य। † सन्तोषज्ञान। ‡ विविक्ता सर्ववर्त्तिता।

पूर्व्वोक्तद्वादशास्रस्य मध्ये कृत्वा यथाविधि ।
योनिं तन्मध्यतो देवीं ललितां पृष्ठतो गुरून् ॥९१ ॥
पार्श्वयोरायुधान्यष्टौ कोणेषु परितः क्रमात् ।
कामेश्वर्य्यादिकास्तत्र तद्बहिर्द्वादशस्वपि ॥ ९२ ॥
द्वादशान्या यजेत्तत्तन्नित्याविद्याभिरेव वा ।
तन्नामविद्याभिर्वा ताः पूजयेत् सार्घकल्पनम् ॥ ९३॥
सन्ध्यात्रयं षष्टिसंख्यं जपेत्तद्दिनविद्यया ।
नान्यत् कृत्यं भवेत्तस्य नित्यनैमित्तिकादिकम् ॥ ९४ ॥

---

पूर्व्वोक्तेत्यादिभिरभूदित्यन्तैः षड्भिः श्लोकैः आत्मवतां जीवन्मुक्तानां ललितापूजाक्रममुपदिशति। तत्र पूर्व्वोक्तद्वादशास्रस्य एकोनविंशपटलप्रोक्तद्वादशास्रस्य मध्ये सर्व्वमध्यस्थवृत्तमध्ये अन्यूनाधिकमानमिति यावत्। योनिं स्वाभिमुखाग्रत्रिकोणं। तन्मध्यतः योनेर्मध्ये। पृष्ठतः योनेः प्राग्रेखावृत्तरेखयोरन्तराले। गुरून् देवीरूपतयेति यावत्। पार्श्वयोः पार्श्वरेखाद्वयवृत्तरेखान्तरालद्वये। आयुधान्यष्टौ पूजापटलोक्तवाद्यादिप्रातिलोम्येनेति यावत्। कोणेषु मध्ययोनेरग्रादिषु त्रिकोणेषु। परितः क्रमात् प्रदक्षिणक्रमात्। कामेश्वर्य्यादिकाः कामेश्वरीं भगमालिनीं वज्रेश्वरीं च। तद्बहिर्द्वादशसु अस्रेष्विति यावत्। अन्याः कामेश्वरीभगमालिनीवज्रेश्वरीव्यतिरिक्ताः। तत्तन्नित्याविद्याभिः तृतीयपटलप्रोक्ताभिरिति यावत्। एवावधारणे। वा विकल्पे। तन्नामविद्याभिः एकोनविंशपटले प्रोक्ताभिरिति यावत्। ताः नित्याः। एतदुक्तं भवति एकोनविंशपटलप्रोक्तविधानेन द्वादशास्रचक्रं विलिख्य तन्मध्यवृत्तमध्ये स्वाभिमुखं समत्रिरेखं त्रिकोणं विलिख्य तन्मध्ये ललितां तन्मध्ये त्रिकोणप्राग्रेखावृत्तरेखान्तराले नाथशक्तीः तदुभयपार्श्वरेखाद्वयवृत्तरेखान्तरालद्वये वाय्वाद्यप्रादक्षिण्येन हेतीर्मध्ययोनेरग्रादिषु त्रिषु कोणेषु कामेश्वरीभगमालिनीवज्रेश्वरीश्च तद्बहिर्द्वादशास्रेषु अन्या द्वादश नित्याश्च प्रादक्षिण्येन तत्तन्नित्याविद्याभिर्नामविद्याभिर्वा यजेदिति। तस्य आत्मवतः। नित्यनैमित्तिकादिकमित्यत्रादिशब्दः काम्यविषयः। तन्मध्ये द्वादशास्रस्य मध्ये। नवयोनिं

तन्मध्ये नवयोनिं वा विधायात्रस्थशक्तिभिः ।
पूजयेत् प्राग्वदुभयप्रकारादिकयोगतः ॥ ९५ ॥
यावज्जीवं विधिस्त्वेष गदितः सिद्धये सदा ।
सिद्धानामपि सर्वेषां येनासौ स्वात्मवानभूत् ॥ ९६ ॥
समस्तमेतत्तन्त्रान्ते कथितं परमेश्वरि ।
यत्परामर्शतो भावस्त्वावयोरैक्यमश्नुते ॥ ९७ ॥
तद्द्याात्तन्त्रमेतत्तु नाभक्ताय कदाचन ।
नाशिष्याय न दम्भाय प्रच्छन्नानयशीलिने ॥ ९८ ॥
नायाचते नास्तिकाय न लुब्धाय न मानिने ।
न पापाय न वित्ताय नादन्नाय च भेदिने ॥ ९९ ॥

---

पञ्चदशपटले प्रोक्तामिति शेषः। वा विकल्पे। अत्रस्थशक्तिभिः सहेति शेषः। प्राग्वत् अग्राद्यप्रादक्षिण्येन उभयप्रकारादिकयोगतः द्वादशास्त्रमध्ये केवलं योनिं नवयोनिं वा लिखेदिति यावत्। सिद्धये आत्मज्ञानस्येति शेषः। सर्वेषां आत्मज्ञानसिद्धानां श्रीविद्यासिद्धानामिति यावत्। योगसिद्धानामाज्ञासिद्धानामिति यावत्। येन विधानेन। असौ सिद्धेषु चतुर्थ्यन्यतमः। स्वात्मवान् स्वरूपज्ञानवान् ॥ ९६ ॥

समस्तमित्यादिभिर्भेदिन इत्यन्तैस्त्रिभिः श्लोकैस्तन्त्रार्थवेदिनः फलं तन्त्रदाने सम्प्रदानभूतस्य वर्जनीयस्य त्रयोदशदोषांश्चोपदिशति। तत्र परमेश्वरीति देवीसम्बुद्धिः। यत्परामर्शतो भावः तन्त्रार्थविद इति शेषः। आवयोरैक्यमश्नुते शिवशक्त्योरभेदस्वरूपो भवति। तच्छब्देन तन्त्रस्यानुभाव उच्यते। तुरवधारणे। कदाचन आपत्स्वपीत्यर्थः। दम्भाय मिथ्याचाराय। प्रच्छन्नानयशीलिने प्रच्छन्नाय अनयशीलिने चेति यावत्। नायाचते नास्तिकाय चेति यावत्। वित्ताय अर्थार्थिमिति यावत्। अदन्नाय जडाय। भेदिने द्विधाभावशीलाय ॥ ९८ ॥

यस्तन्त्रमेतत् सकलं नित्याविद्यासु षोड़श ।
शक्त्या संगृह्य विधिवद्भजते स मदंशकः ॥ १०० ॥
शिवतत्त्वमयी व्याप्तिरिति सम्यक् समीरिता ।
त्वया निफालनाच्चित्ते तत्तत्त्वं स्वात्मसात् कृतम् ॥

इति षोड़शनित्यातन्त्रेषु श्रीकादिमते तन्त्रराजे
स्वात्मकथनं नाम षट्त्रिंशत् पटलम्
परिपूर्णम् परामृष्टम् ॥ ॐतत्सत् ॥
॥ ३६ ॥ ॐ तत्सत् ॥

---

यस्तन्त्रमित्यादिना श्लोकेन यथाविधि प्राप्ततन्त्रार्थवतः फलमुपदिशति ।
त्र विधिवत् नित्यनैमित्तिकादिप्रोक्तक्रमात् स भजनपरः । मदंशकः चित्स्वरूप
श्वर इति यावत् ॥ १०० ॥

इति षोड़शनित्यातन्त्रेषु श्रीकादिमताख्यस्य परिपूर्णस्य तन्त्रस्य प्रपञ्चसार-
सिंहराजप्रकाशाभिधानेन सुभगानन्दनाथेन विरचितायां मनोरमा-
ख्यायां व्याख्यायां देवतादेशिकशिष्यप्रपञ्चादीनां परमार्थ-
स्वरूपप्रकाशनपरं षट्त्रिंशत्पटलं परिपूर्णं
परामृष्टम् ॥ ३६ ॥ ॐतत्सत् ॥

ग्रन्थसंख्याः—षट्त्रिंशे पटले ज्ञेयाः शिवतत्त्वमयेऽत्र च ।
अध्यर्द्धसप्तषष्टिश्च व्याख्याग्रन्थाः शतत्रयम् ॥ २६७ ॥

तन्त्रे प्रकरणान्यत्र श्रीमत्कादिमताह्वये ।
शतानां नवकं त्वेकत्रिंशता च समन्वितम् ॥ ९३१ ॥

---

भुक्तिभूमानमाधुर्य्यभाग्यगन्धेर्द्दसिद्धिगः ।
हंसत् सुरश्रीरित्येकविंशत्यक्षरसंख्यया ॥
२२७७७३९७९९३१४१९५०५४६४ ।
यन्त्राणि स्युः कादिमते तन्त्रे प्रोक्तानि तत्र तु ।
दक्षिणापथपुण्यौघपरिणामाह्वयोदधिः ॥
कोष्ठयन्त्राण्यनन्तानि आदिवर्णोत्थितानि च ।
सम्भूय श्रीकादिमते तन्त्रे व्याख्यानसंख्यया ॥
सहस्राणां द्वादशकं न्यूनं पञ्चाशतेरितम् ।
काश्मीरराजस्य गुरुः श्रीकण्ठेशो द्विजेश्वरः ॥
कदाचिदागतो द्रष्टुं रामसेतुं स्वलीलया ।
तेनैवानुगृहीतोभून्मध्ये मार्गं नृसिंहराट् ॥
मन्त्राण्यधीतवांस्तस्मान्नित्यानां तेषु निर्म्मिता ।
व्याख्या मनोरमाभिख्या तेन कादिमतस्य तु ॥
सुभगानन्दनाथेन द्वाविंशपटलावधि ।
तदाज्ञयावशिष्टानां पटलानां विनिर्ममे ॥
चतुर्द्दशानां तच्छिष्यः प्रकाशानन्ददेशिकः ।
तां सुन्दरवरक्ष्माभृद्वराख्यां प्राक् सम्प्रदायतः ॥
समाप्ता चेयं तन्त्रराजटीका मनोरमा ॥ ॐ ॥